तिरुमलतिरुपतिदेवस्थानम्




# सप्तगिरिः

सचित्रमासपत्रिका

नवम्बर् २०१९ रू.५/-

## तिरुचानूरु श्री पद्मावतीदेव्याः वार्षिक ब्रह्मोत्सवः

२३-११-२०१९ तः
१-१२-२०१९ पर्यन्तम्

क्षीराब्धि कन्यकायै श्री महालक्ष्म्यै
नीरजालयायै नीराजनम्।

- अन्नमय्या



# तिरुमलतिरुपतिदेवस्थानस्य धर्मकर्तृ मंडलिः

तिरुमल तिरुपति देवस्थानस्य नूतन धर्मकर्तृ मंडिलं आन्ध्रप्रदेश् प्रभुत्वं अध्यक्षं, सभ्यान्, एक्स् अफिषियो सभ्यान्, विशिष्ट आह्वानितान् नियुङ्क्त एभिः तिरुमल श्री स्वामिनः आलये ति.ति.दे. कार्यनिर्वहणाधिकारी, उन्नताधिकारिणः प्रमाणस्वीकारं कारितवन्तः श्री श्रीनिवासस्य तीर्थप्रसादान् प्रदत्तवन्तः। वेदपण्डिताः तेभ्यः आशीर्वचनं कृतवन्तः।



श्री वै.वि.सुब्बारेड्डिः
पालकमण्डलि अध्यक्षः



श्री यु.वि.रमणमूर्तिराजुः
सभ्यः



श्री यम्.वेंकटमल्लिकार्जुन रेड्डिः
सभ्यः



श्री के.पार्थसारथिः
सभ्यः



श्री पेरिगेल मुरलीकृष्णः
सभ्यः



श्री के.कृष्णमूर्ति वैद्यनाथन्
सभ्यः



श्री नारायणस्वामि श्रीनिवासन्
सभ्यः



श्री जे.रामेश्वररावः
सभ्यः



श्रीमती वि.प्रंशाति
सभ्यः



डा.बि.पार्थसारथि रेड्डिः
सभ्यः



डा.निचित मुप्पवरपु
सभ्यः



श्री नादेल्ल सुब्बारावः
सभ्यः



श्री डि.पि.अनंत
सभ्यः



श्री राजेष् शर्मा
सभ्यः



श्री रमेष् शेट्टि
सभ्यः



श्री गुंडवरं वेंकट भास्कररावः
सभ्यः



श्री मूरं सेट्टि रामुलु
सभ्यः



श्री ढि.दामोदर रावः
सभ्यः



तदुपरि मण्डलि सभ्यः विवरण २३ पुटश्च

## गीतामृतम्



अत्र शूरा महेष्वासा भीमार्जुन समायुधि।
युयु धानो विराटश्च द्रुपदश्च महारथः।।

अस्मिन् पाण्डव पक्षे धनुर्धारिणः महान्तः योद्धारः सन्ति।
तेषु विराटः द्रुपदमहाराजौ आस्ताम्।।

(भगवद्गीता १/४)

## सङ्कीर्तनम्



कन्दर्पजनक गरुडगमन
नन्दगोपात्मज नमो नमो।।कन्दर्प।।
वारिधिशयन वामन श्रीधर
नारसिंह कृष्ण नमो नमो
नीरजनाभ निगमगोचर
नारायण हरि नमो नमो ।।कन्दर्प।।
परमपुरुषा भवविमोचन
वरद वसुधावधूवर
करुणाकान्ता कालिन्दीरमण
नरसख शौरी नमो नमो ।।कन्दर्प।।
दानवदमन दामोदर शशि
भानुनयन बलभद्रानुज
दीनरक्षक श्रीतिरुवेङ्कटेश
नानागुणमय नमो नमो ।।कन्दर्प।।

(श्री अन्नमाचार्यस्य संस्कृतसङ्कीर्तनानि)

अस्यां सङ्कीर्तनायाम् अष्टाविंशति विशेषणैः श्रीमन्नारायण नामसङ्कीर्तनपरैः भगवान् आचार्येण बहुधा संस्तुतः। कृष्णकालिन्दीरमण- नरसख-शौरि-बलभद्रानुजेत्यादि विशेषणानि कृष्ण-पराणि। अन्यानि तु श्रीमन्नारायणपराणि।



सम्पादकीयम्

# अलमेलुमङ्गाविर्भाव वेलायाम्

सुन्दरे भूलोके अलमेलुमङ्गम्मायाः अवतारकथा महाद्भुततया विवृता वर्तते। सहस्रदलयुते स्वर्णपद्मे सा माता 'पद्मावती' रुपेण आविर्भूता। सः समयः आश्चर्यकरः। श्रीवेङ्कटेश्वरः 'श्रीनिवास' रुपेण कथमभूदिति विषयं ज्ञास्यमश्चेत् अस्याः वेलायाः सन्दर्भेऽपि अवगमनं भवति। अनेन लोककल्यणार्थम् अलमेलुमङ्गा - आनन्दनिलययोः भूलोकागमनस्य दिव्यवृत्तान्तमपि ज्ञायते।

'कलौ वेङ्कटनायकः'! इति प्रशस्त्या, भूलोकवैकुण्ठं तिरुमलः प्राप्तः वेङ्कटेश्वरः श्रीमहालक्ष्म्या विना भक्तकामनाः पूरयितुं स्वमशक्तः इति मत्वा कोल्हापुरक्षेत्रे स्थितायाः महालक्ष्म्याः पार्श्वे गत्वा दशवर्षाणि यावत् मातुः दर्शनार्थं तपं कृतवान्। तदा अशरीरवाण्याः आदेशानुसारं स्वर्णमुखरी नदीतीरं प्राप्य, पद्मसरोवरं प्रतिष्ठापितवान्। तत्रापि द्वादशवर्षाणि यावत् महालक्ष्म्याः दयानिमित्तं तपं कृतवान्।

एकस्मिन् कार्तिकमासे (सौरमानानुसारं) शुक्ल पञ्चमी शुक्रवासरे अभिजित्लग्ने श्रीमहालक्ष्मीः पद्मसरोवर दिव्यजलेषु सहस्रदलयुते प्रकाशमान स्वर्णपद्मे आविर्भूता। एवमुद्भूतायाः श्रीमहालक्ष्म्याः नाम 'पद्मावतीदेवी' इति ब्रह्मादिदेवाः कृतवन्तः। पद्मोपरि प्रकाशमानायाः तस्याः ''अलर्मेल्मङ्गा'' इति केचन स्तुतवन्तः। सा माता झटिति जगत्कल्याणाय परितप्यमानस्य तिरुमलेशस्य समीपे आगतवती। श्रीवेङ्कटेशः स्वस्मिन् कण्टे स्थितां मालां तस्याः कण्ठे अलंकृत्य, तामालिङ्गनं कृतवान्। ततः स्वस्मिन् हृदये 'व्यूहलक्ष्मी' रुपेण तां प्रतिष्ठाप्य तिरुमलां प्राप्तवान्। किन्तु ब्रह्मादिदेवानां प्रार्थनया तत्रैव अवतृते पद्मसरोवरतीरे एव ''अलमेलुमङ्गा'', ''पद्मावती'' नामभ्यां श्रीस्वामिनः विना स्वतंत्रेन 'वीरलक्ष्मी' रुपेण अर्चामूर्तिरुपेण पूजाः स्वीकुर्वती वरान् प्रसादयति। तदा ब्रह्मादिदेवैः 'श्रीपद्मावतीमात्रे निर्वहितः ब्रह्मोत्सवः अधुनापि वैभवेन आचरन्तः सन्ति। मुख्यतया उत्सवानां चरमे 'पञ्चमीतीर्थ' दिने तिरुमल श्रीस्वामी उपायनरुपेण शाटिकारवलिकां, हरिद्रा कुङ्कुम, आभरणानि, सक्तुनिर्मितान् पदार्थान् गजोपरि स्थाप्य मात्रे प्रेषयति। तमाचारं सम्प्रदायतया इदानीमपि आचरन्ति।

माता अलमेलुमङ्गा साक्षात् आनन्दनिलयस्य दयास्वरुपः। सा सर्वासुवेलासु सर्वेषु प्रदेशेषु, सर्वावस्थासु भक्तकामनाः पूर्णीकरोति। तदर्थमेव श्रीवेङ्कटेशं सम्प्राप्तवती। भक्तानां प्रार्थनाः श्रुत्वा, वेङ्कटेशाय श्रावयित्वा तेषां वाञ्छाः शीघ्रतया पूर्णीकरोति। तिरुमल आनन्दनिलयस्य वक्षस्थले 'व्यूहलक्ष्मी' रुपेण, तिरुचानूरु मध्ये 'पद्मावतीदेवी' रुपेण, 'अलमेलुमङ्गा' रुपेण च अर्चामूर्तितया प्रकाशमाना मातुः सती सर्वान् लोकान् प्रकाशयति परमदयामयी श्रीपद्मावती माता।

एभिर्विशेषगुणैः प्रकाशमाना अलमेलुमङ्गा। 'पञ्चमीतीर्थ' दिने, ततः दशदिनात्पूर्वं पत्येकस्मिन् वेलायां महाराज्ञीव शेषवाहने 'अनन्तलक्ष्मी' रुपेण, हंसोपरि 'सरस्वती' इव, कल्पवृक्षे 'कामितार्थ प्रदायिनी' इव, गजवाहनोपरि 'गजलक्ष्मी' रुपेण, गरुडवाहनोपरि श्रीवेङ्कटाद्रिलक्ष्मी' इव हनुमद्वाहने 'सीतालक्ष्मी' रुपेण एवं श्रीआनन्दनिलयस्य पत्नी अलमेलुमङ्गा कार्तिकब्रह्मोत्सववेलासु दर्शनं यच्छति। तासु वेलासु सर्वेऽपि भक्ताः भागं गृहीत्वा नेत्राभ्यां वीक्ष्य कीर्तयन्तः सन् आध्यात्मिकानन्दान् प्राप्नुवन्त्विति एवञ्च पुनः भक्तलोकम् आह्वयति 'सप्तगिरि' मास पत्रिका।

॥ ओम् श्रियै नमः॥

तिरुमल-तिरुपतिदेवस्थानस्य सचित्रमासपत्रिका

सम्पुटिः-०६ सञ्चिका-०८

# नवम्बर् २०१९

श्रीविकारिनामसंवत्सरस्य कार्तीक शुक्ल पंचमि तः
मार्गशीर्षशुक्ल चविति पर्यन्तम् - १९४१

*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*



# सप्तगिरिः



मुखचित्रम् – श्री पद्मावती देव्याः, तिरुचानूरु
अन्तिमरक्षापुटः – पञ्चमीतीर्थम्, तिरुचानूरु






## सङ्केतः

प्रधानसम्पादकः,
सप्तगिरि, ति.ति.देवस्थानम्,
तिरुपति - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९,
२२६४३६०
सूचनानाम्, आक्षेपाणां च कृते
संपर्कं कुर्वन्तु -
sapthagiri_helpdesk@tirumala.org



एका पत्रिका : रू.५/-
वार्षिकग्राहकत्वम् रू.६०/-




# पद्मावतीदेव्याः ब्रह्मोत्सवः

तेलुगु मूलम् - डा.आकेल्ल विभीषणशर्माः
संस्कृतानुवादः - श्री आदिलक्ष्मी
चरवाणि - ९९४९८७२१४९

**श्री**महाविष्णु भूलोके १०८ दिव्यतिरुपतिक्षेत्रेषु अर्चामूर्तिरुपेण विराजन्ते। तत्र स्वयंव्यक्तरुपेण श्रीरङ्गं, श्रीमुष्णं, तोताद्रि सालग्रामं, नैमिशं, बदरिकाश्रमं, काञ्चि वेङ्कटाचलाष्टक्षेत्रेषु पूजां गृह्णाति। येषु अष्टक्षेत्रेष्वपि तिरुमलक्षेत्रं स्वामिनः प्रत्यक्ष महिमैः साक्षीभूतत्वेन शोभितोऽस्ति। पद्मनाभिनः तिरुमलस्वामिनः देवेरी 'अलमेलुमंगम्मा' तिरुचानूरुक्षेत्रे विलसितोऽस्ति। तिरुचानूरुः कलियुगदैवः श्रीनिवासप्रभुः तपमाचरितपुण्यप्रदेशोऽस्ति। सूर्यनारायणं पुरतः संस्थाप्य स्वहृदयपद्मे वासितां लक्ष्मीरुद्धिश्य दीक्षया द्वादशवर्षाणि तपश्चकार। देवलोकात् सुवर्णकमलानि अनीय सरोवरे स्थापितवान्। तदानीं तत्र लोकमातारनुग्रहस्वरुपिणी अगणितमहिमान्वितनिलये पद्मसरोवरे कार्तिकमासे शुक्लपक्षपञ्चमीतिथ्यां उत्तराषाडनक्षत्रे भृगुवासरे स्वर्णकमले अवतरितवति।

अस्मिन् क्षेत्रे प्रतिसंवत्सरं वृश्चिकमासे पञ्चमीदिने अवभृथं संकल्प्य तत्पूर्वं नवमदिने ध्वजारोहणोत्सवं निर्वहणं भवति। लघुशेषवाहनमारभ्य विविध वाहनेषु माता ब्रह्मोत्सवसन्दर्भे तिरुवीथिषु सञ्चारं करोति। भक्तानां विविधसन्मङ्गलफलानि प्रसादयति।

**ध्वजारोहणम् -** अखिलाण्डकोटिब्रह्मांडनायकस्य हृदयेश्वरी पद्मावतीदेव्याः गजध्वजारोहणेन ब्रह्मोत्सवानां श्रीकारः भवति। मृत्संग्रहणानन्तरं निर्वाहिते ध्वजारोहणेन ब्रह्मोत्सवाः लाञ्छनप्रायेण प्रारम्भिताः भवन्ति। ध्वजमालये जीवस्थानं भवति। ये नवाह्निकब्रह्मोत्सवानां सकलदेवतानां परिषद्देवतानां, भक्तकोटीणामाह्वानार्थमेव ध्वजारोहणं निर्वहणान्तरार्थः भवति।

**लघुशेषवाहनम्ः** श्रीपद्मावतीदेव्याः ब्रह्मोत्सवेषु प्रप्रथमोत्सवः लघुशेषवाहनं भवति। शेषः श्रीवैकुण्ठे नित्यसूरिः लक्ष्मीनारायणस्य सेवां करोति।

द्वयमन्त्रादयः मातुर्मिलित स्वामिनं स्मरणीयः इत्येवं वर्णयन्ति। लघुशेषवाहने पद्मावतिः जीवकोटिसंरक्षितः लोकमातुः रुपेण दर्शनं ददाति। शेषशेषिं श्रीनिवासं निरन्तरं संकीर्तनमेव भागवतानां कर्तव्यं भवति। जीवकोटिपरिरक्षणं स्वामिनं परिज्ञातुं मातुरनुग्रहमेव मूलकारणं भवति।

**महाशेषवाहनम् -** श्रीपद्मावतीदेव्याः कार्तिक ब्रह्मोत्सवेषु द्वितीयवाहनं महाशेषवाहनं भवति। नित्यमुक्तीनामाद्यः शेषः लक्ष्मीसहितनारायणस्य दासः सखा, सिंहासनः, छत्रं, समयोचितरीत्या विविधरुपेषु सेवितवान्।

परमपुरुषः श्रीनिवासस्य हृदयेश्वरी पद्मावती विविधांशेषु जीविनः प्राधान्यतां ददाति। तद्दिव्यतत्वमेव 'हे माता! महालक्ष्मी! पुरुषेषु भाग्यलक्षणमपि त्वदीयांशः! स्त्रीणां विलासलक्षणमपि त्वदीयांशः। गजाः, 'अश्वाः, विहगाः सर्पाः' एतेषांमासधारणविशेषलक्षणमपि त्वदीयांशः। अगस्त्यमहर्षिः प्रत्येकत्वं प्रस्तुतीकृतवान्। शेषवाहने मातुः दर्शनं विषतुल्यमानवानां पापानि दूरी करोति।

**हंस वाहनम् :-** श्रीपद्मावतीदेव्याः वार्षिक ब्रह्मोत्सवेषु द्वितीयदिने निशि हंसवाहने वीणापाणिः दर्शनं ददाति। हंसः क्षीरनीर विभागं करोति। नीरं त्यक्त्वा क्षीरं स्वीकरोति समस्तविद्यादायिनी पद्मावती कलाः समस्तसृष्टिं विभूतिमन्तं, कान्तिमन्तं, समृद्धिमन्तं कुर्वन्ति। त्रिमूर्तिनां चन्द्रसूर्याग्निनभिव्याप्तः सृष्टेः जीवराशिषु विविध कलारुपैः प्रकाशितो भवति।

**'वीण वायिंचेने अलमेलुमंगम्म'**
**वेणुगान विलोलुडैन वेङ्कटेशुल योद्ध'' -** इति अन्नमय्या कीर्तितवान्।

अनुनित्यं वेणुगानविलोलं श्रीवेङ्कटेश्वरसविधे नेत्रपर्वेण वीणालापनकर्त्री पद्मावती हंसवाहने तिरुमाडवीथिषु विहरति। ताल्लपाककविभिः कीर्तितं सकलविद्यासारं मातुरनुग्रहमेव। योगिमनोविहारिणः श्रीवेङ्कटेश्वरस्योपरि भक्तिं शरणागतिं सकलभक्तबृन्दानां करुणान्तरङ्गा पद्मावती प्रसादयति।

**मौक्तिकतोरणवाहनम् :** पद्मावती तृतीयदिन प्रातः मौक्तिकतोरणवाहने विहरति। मुग्धमोहनमुक्ताफलानि मातुः प्रीतिपात्राः। स्वातिकार्तिके वृष्टिबिन्दुभिः समुद्रे स्थितं मुक्ताफले पतित्वा मुक्तकरुपेण परिणामः प्राप्नोति। गजानां कुम्भस्थलेष्वपि मौक्तिकाः भवेयुरिति, ताम्रपर्णीनदीतीरेऽपि प्राप्तुं शक्यतेति, कल्पवृक्षशाख - अन्तेष्वपि मौक्तिकाः स्थास्थन्तिरिति पुराणवचनम्। मौक्तिकाभारणालङ्करणं विवाहोत्सवे मौक्तिकान् वधूवराः विवाहङ्गत्वे विनियुज्यन्ते। शिरोधारणोत्सवस्या चारोऽपिरवर्तत।

अन्नमाचार्यः मौक्तिकाः मातुः स्मितस्य, कटाक्षस्य, वाचः लज्ञायाः प्रतीकत्वेन वर्णितवान्। स्वामिनः नाममपि रतिकेल्याः पद्मावत्याः मन्दहासमेव।

श्वेत, शीतल मौक्तिकतोरणवाहने ढोलायमानं मातरं भक्तबृन्दाः दर्शयित्वा तापत्रयविनाशं कुर्वन्ति। तद्वारा कैवल्यप्राप्तिं च प्राप्नुवन्ति। तां लोकमातरं ब्रह्मादयः श्रीवेङ्कटेश्वरानुग्रहयोग्यता प्राप्यर्थं अनुनित्यं प्रार्थयन्ति।

**सिंहवाहनम् -** कार्तिक ब्रह्मोत्सवेषु श्रीनिवासदेवेरि तृतीयदिने रात्रौ सिंहवाहने दर्शनं ददाति। माता सिंहवाहनेरुपविश्य दुष्टशिक्षणं, शिष्टरक्षणं बहुसुलभतया करोति। भगवति पद्मावती संपत्, वीर्यं, यशः, श्रीः ज्ञानं वैराग्यमिति षड्गुणान् भक्ताननुगृण्णाति। श्रीवेङ्कटेश्वर हृदयेश्वरी स्वामिनः ममैकशक्त्या ध्यानमपि संप्रदायः।

नित्यपायिनी, श्रीनिवासहृदयेश्वरि पद्मावती अमूल्यसंपत्प्रदायिनीरिति कीर्तिता। अस्मिन्जगति पराक्रमयुक्त्या, कान्तियुक्त्या भासमानः स्फुटवैभवः श्रीनिवासविभूतिरिति कथयन्ति। तदेव समैक्यरुपः सिंहवाहनस्वरुपः। तत्रैव माता तिरुचानूरुतिरुमाडवीथिषु विहरितालमेलुमंगा। अलमेलुमंगा सृष्टेः पुष्टिदात्री मङ्गलदेवता च।

सूर्ये तेजः शशाङ्के, शीतलः, जले शैत्यं, दाहकत्वं, पृथिव्यां गन्धत्वं, विकाशशक्तित्वं अस्मिन्क्षेत्रे पाञ्चरात्रागमोक्तविहित पूजार्चिता मङ्गलदेवता च! सर्वसंपदामधिष्ठात्री सिंहवाहने प्रसन्नतया दर्शनदात्री पद्मावतीदेवी प्रपन्नजनपरिरक्षिता धैर्यलक्ष्मीः।



**कल्पवृक्षवाहनं: -** 'कल्पवृक्षं पद्मावती देव्याः चतुर्थदिने प्रातः वाहनं भवति। क्षीरसागरमथनवेलायां लक्ष्म्यास्सह कल्पवृक्षोद्भवः जातः। क्षुत्पिपासां दूरीकृत्य पूर्वजन्मस्मरणं प्रसादितः एषः उदारदेवतावृक्षः समस्त वाञ्छितार्थपूरकः वर्तते। खड्गं, योगदण्डं धारिता गोपकिशोरी गोसंपदां परिरक्षयति

मङ्गलदेवतालमेलुमंगा! मंगम्मचरणौ कल्पतयेः शाखामति - शयन्तीतिरन्नमय्या कीर्तितवान्।

**''तरुणि पादालु कल्पतरुवुचिगुरु बोले परगग 'दन वेनुबलमंटानु'**

लक्ष्मीः पद्मावत्याः स्वरुपे कलियुगदेवं श्रीवेङ्कटेश्वरं वैकुण्ठात् भूलोकमानीतवती। अलमेलुमंगानुग्रहेण उत्साहोल्लासानन्दादयः भवन्ति। कल्पवृक्षवाहने विहरिता मातारिप्सितार्थवरप्रदायिनी! मोक्षापवर्गप्रसादिनी, श्रीनिवास धर्मपत्नी च। वाञ्छितार्थप्रदायिनी, कल्पवृक्षवाहनविहारिणी माता आश्रितभक्तानामाधिकदुःखनाशने परिपूर्णशक्तिस्वरुपः भवति।

**हनुमद्वाहनम् -** कार्तिकब्रह्मोत्सवेषु चतुर्थदिने रात्रौ अलमेलुमंगम्मा हनुमद्वाहने दर्शनं ददाति। अतुलितमतिमन्तः आञ्जनेयः श्रीरामचन्द्रस्यानन्यभक्तः। त्रेतायुगे श्रीनिवासः श्रीरामावतारेवतरितवान्। एतैव माता तदानीं सीता नाम्ना मिथिलायामवतेरिता सति श्रीरामचन्द्रं कल्याणमकरोत्। तदर्थं वानरान् प्रेषितवान्। मारुतिः सागरोल्लङ्घनं कृत्वा लङ्कायां सीतामातरंम शोकवने दर्शितवान्। अकलङ्कराम मुद्रिकां तस्याः सीतायाः प्रदत्वाश्वासितवान्। तां अनुनयनं कृत्वा श्रीरामः भल्लूकवानरसैन्येन लङ्काक्रमणं कृत्वा शीघ्रतया भवद्रक्षणं करिष्यतीत्यभयं दत्तवान्। नो चेत् मदीय भुजस्कन्धे उपवेशनेनापि रामसकासं नेष्यामीति भक्त्या प्राथितवान्।

मदीय भुजस्कन्धमारोहय! अनङ्गीकारं मा कथय! रोहिणी चन्द्रानुसरणरीत्या श्रीराममनुसर्तुं निश्चयतुरिति प्रार्थितवान्। तदा सीता वीरः श्रीरामः रावणं जयित्वा मां नेतुर्युक्तमितिरवदत्।

सैव सीतामाता कलियुगे पद्मावतीरुपे अवतरितवती। अर्चामूर्तिस्वरुपे पूजां स्वीकरोति। सीताभिज्ञानं श्रीरामाय दत्वा, निवेदनप्रतीक याञ्ञानेय वाञ्छापूरणार्थायालवेलुमंगा ब्रह्मोत्सवेषु श्रीरामरुपे हनुमद्वाहने विहारं करोति।

अस्मिन्वाहने मातुः दर्शनेन भक्तानां बलं, कीर्तिं धैर्यं, अरोग्यं, अजाड्यं विशेषेण लभन्ते।

**ढोलोत्सवः -** अलमेलुमंगम्मकार्तिकब्रह्मोत्सवेषु ढोलायां पञ्चमदिने प्रातः विहरणं भवति। माता जगन्मोहिनी विश्वरुपिणी च। देवदेव्याः विराङ्त्रपस्य सूर्यचन्द्रौ वेणीपताकौ भवतः। मातुः मङ्गलदेवतायाः समीपेस्थितः शुकः गानं करोति। ज्योस्नारुपिणीं पद्मावतीं आसीनान्दोलिकां मुग्धमोहन स्त्रियः वहन्तीति अन्नमय्यः कीर्तिवान्।

**जल जल रालीनि जाजुलु मायम्मकु....**

सौन्दर्यराशी पद्मावतीं 'विभूत्यै नमः' इति भक्ताः कीर्तयन्ति। अष्टसिद्धयः तस्याः विभूतिस्वरुपाः। सा ऐश्वर्यदेवता। अतः ढोलोत्सववाहनसेवायाः दर्शनेनाष्टसिद्धिनां प्राप्तिः भवति।

**गजवाहनम् :** कार्तिकब्रह्मोत्सवेषु पञ्चमदिने रात्र्यां पद्मावती स्वर्णगजारुढा भवति। गजपटारोहणेन मातुः उत्सवाः प्रारम्भाः भवन्ति। पद्मावत्याः गजवाहनसेवा विशेषतया प्राधान्यतां प्राप्नोति। अशेषभक्ताः तत्सेवायां भागं गृहीत्वा तरन्ति। ऐरावतः क्षीरसागरमथनवेलायां लक्ष्मीदेव्याः सहोदरेणोत्पन्नः। गजः ऐश्वर्यसूचकः। अतएव 'आगजान्तं ऐश्वर्यमित्यार्योक्तिः'। क्षीरसागरसम्भूतां तां लक्ष्मीं गजराजाः भक्त्याभिषेकं कारितमितिविषयं वेदान्तदेशिकाः श्रीस्तुतौ वर्णिताः। दिग्भारमष्टदिग्गजाः वहन्ति। कलियुगे श्रीनिवासस्य पद्मावत्याः प्रथम परिचयस्य हेतुरपि गजराजयेव।

कनकधारास्तवे दिग्गजानां शुण्डान्ते स्वर्णकलशानि धृत्वाकाशगङ्गायाः जलेनाभिषेकं मातुः प्रतिदिनं कुर्वन्ति। जगज्जननी सर्वलोकप्रभोः विष्णोः पट्टमहिषी, गृहिणी च। सुधासागरोद्भवां तां प्रातः काले स्मरणीयमिति ज्येष्ठाः वदन्ति। ''नीवे तप्प इतः परं बेरुंगननि'' शरणागतिं प्राप्य मकरेण रक्षितः गजेन्द्रः परमभागवतोत्तमः। गजेन्द्रमनुसृतशरणागतिमार्गं समस्तजीवाः आश्रयणीयमितिसन्देशमपि 'गजवाहनसेवा' उपदेशं ददाति।



**सर्वभूपालवाहनम् -** षष्ठमदिने प्रातः पद्मावतीदेवि सर्वभूपालवाहने विहरति। सकललोकेश्वरः श्रीवेङ्कटेश्वरः तस्य हृदयपीठे स्थित्वा लोकरक्षणं करुणया माता करोति। आदित्यपुराणे द्वितीयाऽध्याये दिक्पालसंसेवितः प्रभुः रमासहितः लोकरक्षककरुणा - मूर्तिस्वरुपेण वर्णितमस्ति। सर्वभूपालवाहने तां देवदेवीं - नदीनायसागरपुत्रीं पद्मावतीं सेवनेन राज्यसुखप्राप्तिः लभ्यते।

**गरुडवाहनम् -** ब्रह्मोत्सवेषु पद्मावतीदेवी षष्टमदिने रात्रौ गरुडवाहनारुढा भवति। गरुडः नित्यसूर्यामग्रेसरः। 'वेदात्मा विहगेश्वरः' इति श्रुति वाक्यम्। गरुडस्य पक्षे द्वे ज्ञानवैराग्यचिह्नम् प्रदायक्षाः संवदन्ति। श्रीनिवासस्य श्रीदेव्याः नित्यवाहनः गरुडः। गरुडसेवायाः 'पेरियतिरुवडि' इत्यपि भावयन्ति। भक्तेः साकाररुपः गरुडः देवेन्द्रस्य वज्राघातस्य पक्षखण्डनबलशालिः। १०८ दिव्यदेशेष्वपि गरुडसेवायाः प्रत्येकाधरणं वर्तते।

श्रीनिवासं, श्रीदेवीं अनुनित्यं गरुडः दासरुपेण, छत्ररुपेण, आसनरुपेण, वाहनरुपेण एवमनेक विधैः सेव्यते। अतः पद्मावत्याः गरुडसेवा भक्तानां दासभक्तिं प्रसादयति।

**सूर्यप्रभवाहनम् -** पद्मावतीदेवी कार्तिक ब्रह्मोत्सवेषु सप्तमदिने प्रातः सूर्यप्रभावाहने विहरति। सूर्यः प्रकृतेः चैतन्यप्रदाता, लोकाणामारोग्यप्रसादकः, सहस्रकिरणस्वरुपश्च! परमात्मा सूर्यमण्डलसंस्थितः भवति। अतः श्रीनिवासस्य वक्षः स्थले स्थितां मातरं सूर्यप्रभाब्रह्मोत्सवेषु वाहनरुपेण सेवनं समुचितमेव भवति। सूर्यनारायणसाक्षीभूतः तिरुचानूरुप्रान्ते स्वामिः तपः कृत्वा कृतार्थः जातः। तिरुचानूरुप्रान्ते अद्यापि नित्यपूजा कैंकर्यैः भासमानः सूर्यदेवालयः तद्विषयस्य साक्षीभूतः दृश्यते। सूर्यप्रभावाहने मातुः दर्शनमारोग्यमैश्वर्यसस्सन्तानसुविज्ञानादि फलानि पूर्णानुग्रहेण भवन्ति।

**चन्द्रप्रभवाहनम् -** श्रीपद्मावतीदेव्याः ब्रह्मोत्सवेषु सप्तमदिने रात्रौ चन्द्रप्रभावाहने माता नेत्रानन्दं जनयति। उपनिषदः सख्युरुपेणस्थितां लोकमातरं चन्द्रप्रभावाहनमुचितमेव स्वकीयस्मितज्योत्स्नायां श्रीवेङ्कटेश्वरस्याह्लाददायिनीं पद्मावतीं चन्द्रः शीतलश्वेतकान्तिभिः स्वप्रभां मातुः वाहनरुपे प्रदत्तवान्। अगस्त्यः चन्द्रमुखीं मनोहरतया प्रस्तूय -

**चन्द्रमुनियंदु ज्योत्स्नवु चन्द्रवदन।**
**प्रभवुवासरकरुनंदुपद्मनयन!**
**दाहशक्तिवि पूभोडि! दहनुनंदु**
**म्रोक्केदनु नीकु कल्याणमूर्ति! लक्ष्मी'' !!**

त्वं चन्द्रे ज्योत्स्नारुपः, सूर्ये प्रभुस्वरुपः अग्नौदाहकशक्तिरपि त्वमेव! हे कल्याणमूर्ति! लक्ष्मीः त्वमेव शरणं ममेति शरणागतिं गतः। चन्द्रप्रभावाहनसेवया भक्तानामाध्यात्मिकधि - भौतिकमाधिदैविकादि तापत्रयाः निवारिताः भवन्ति। सुखजीवनमपि लभ्यते।

**रथोत्सवंः -** श्रीपद्मावतीदेव्याः ब्रह्मोत्सवेषु अष्टमदिने रथोत्सवः सञ्चालितो भवति। वाहनसेवेषु अत्यन्तप्रधानोत्सवः रथोत्सवः। रथोत्सवेसंख्याक भक्ताः सेवितुं र्तत्तुमवकाशोपलभ्यते। रथसेवायां भागग्रहीतमाबालगोपालं गोविन्दनामसंकीर्तनैः, भजनैः, सेवाभाग्यंम प्रस्तूयन्ते।

आत्मारथिकः, शरीरं रथः, बुद्धिः सारथिः मनः रज्जुरिन्द्रियाः तुरगाः विषयवीथिषु सञ्चलिताः भवन्तीति कठोपनिषदि वर्णितमस्ति। पद्मावती रथे ब्रह्मोत्सवे ढोलायमानवेलायामन्नमाचार्यः आत्मानात्मविवेकदायकः रथसेवां बहुसंकीर्तनेषु प्रस्तुतीकृतवान्।

**अश्ववाहनम् -** कार्तिक ब्रह्मोत्सवेषु पद्मावती देवी अष्टमदिने रात्रिसमये अश्ववाहनमारुह्य नेत्रानन्दं जनयति। अश्वं वेगेन धावमानः सुन्दर जन्तु विशेषः। अतएव उपनिषदः इन्द्रियानश्वतुल्यमिति अभिवर्णयन्ति। अलमेलुमंगा समस्त वाञ्छितार्थप्रदायनैकोपायत्वेन सौभाग्यचिह्नतया राजसेनाश्वं संसूचयति। दारिद्यदुःखमपवारणे पद्मावती आश्रितहृदयशोकहन्त्री, लोकमाता च। लोकनाथः श्रीनिवासस्थनित्यापायिनी 'अलमेलुमंगम्मा'।!!

पद्मावती श्रीनिवासस्य प्रथम कटाक्षवेलायां, प्रणयवेलायां, परिणयवेलायां साक्षीभूतः तुख्ययेव। पद्मावत्याः हयवाहनसेवाभाग्येन भक्तानां कलिदोषाः निवारिताः भवन्ति।

**पञ्चमीतीर्थ महोत्सवं -** पाञ्चरात्रागमसम्प्रदायानुसारं अस्मिन्क्षेत्रे समस्तपूजार्चनाः निर्वहिताः भवन्ति। पाञ्चभौतिकविकारजन्याः शब्द स्पर्शरुपरसगन्धादिविषयसुखभोगात् नरं विमुखं कृत्वा परमात्मसेवायां पाञ्चरात्रशास्त्रं तरयति। पाञ्चरात्रमेव पञ्चरात्र पञ्चरात्रम् पञ्चरात्रीणां साक्षात् श्रीमन्नारायणः लक्ष्मीब्रह्मानन्तगरुडविष्वक्सेनां उपदेशकृतार्चनाविधानः। एते पाञ्चरात्रागमसंहिताः '१०८' भवन्तीति विद्वांसः कथयन्ति।

अस्मिन् पर्वदिने प्रत्येकपूजादयः भवन्ति। स्वधर्मपत्न्याः कृते श्रीनिवासः हरिद्राकुंकुमतुलसीपीताम्बराणि, उपायनानि गजेषु नगरे प्रदर्शनरुपेणानीय तिरुचानूरुमध्ये आलयमर्यादाभिरनुसृत्य दास्यन्ति। सुदर्शन स्वामिनः सहितः अवभृथस्नानार्थं ब्रह्मोत्सवायाशपरिहारार्थं उत्सवमूर्तिस्सह माता पद्मसरोवरं नयन्ति। कार्तिकपञ्चम्यां तिरुमलायां श्रीनिवासस्य, पद्मावत्याः चक्रस्नानपरिसमाप्ति पर्यन्तं सेवाकैंकर्य्याः न भवन्ति। क्षीरं, दधि मधुः, हरिद्रां, नारिकेलजलमुपयुज्य अभिषेकं निर्वहन्ति। हरिद्राकुंकुमाः प्राप्तुं तत्रागताः स्त्रियः अनन्तैश्वर्यामुष्मिकप्राप्तिं च भागवताः अभिषेक दर्शनेन प्राप्नुवन्ति। चक्रस्नानानन्तरं अशेषभक्ताः पद्मसरोवरे स्नानं कृत्वा धन्याः भवन्ति। पद्मसरोवरे पञ्चमीतीर्थस्नानभाग्यं कोटिजन्मनः पुण्यफलम्।




# मनोनिग्रहस्य मार्गः

तेलुगु मूलम् - डा॥ वैष्णवाङ्घ्रि सेवकदासः
अनुवादकर्त्री डा. एम्.प्रफुल्ला
चरवाणि - ९४४०२८५९८५

आबालवृद्धपर्यन्तं सर्वे पीड्यन्ते मानसिकचिन्तया। सामान्यतः मनः एव सर्वेषां प्रसङ्गविषयः भवति। अद्यतन काले मानसिकचिन्ताः परिवर्धिताः। एषा अद्य मनोग्लानिरिति कथ्यते। एषा स्थितिः इतः पूर्वं मानसिकसंक्षोभः इत्युक्ता। प्रधानतः मानसिकसंक्षोभः विद्यार्थिषु वार्षिक, प्रवेश परीक्षा समये, मुखामुखि समावेशेषु (Interview) क्रीडास्पर्धासु जायते। एषः न केवलमाधुनिककाले जातः विकारः। भगवद्गीतायां एतमधिकृत्य चर्चा श्रीकृष्णार्जुनयोः वाकोवाक्ये अस्ति। यदा अर्जुनः मनोनिग्रहः वायुनिग्रहः इव अत्यन्त दुष्करः इत्युक्तवान् तदा श्रीकृष्णः

असंशयं महाबाहो मनो दुर्निग्रहं चलम्।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते॥

-भ.गी. ६-३५.

इति मनोनिग्रहविधानमादिशत्। मनः चञ्चलमिति साक्षात् परमात्मा अङ्गीकृतवान्। अपि च अयं सर्वेषामपि विदितः। क्षणमपि मनः शून्यं न विद्यते। मनः नाम किमिति प्रथमतः ज्ञातव्यम्। मनः केवलं चिन्तनानां परम्परा। अर्थात् भूतभविष्यद्वर्तमानेति त्रिविधचिन्तनानामाकरः एव मनः। गतविषयान् स्मृत्वा खेदमनुभवति। भविष्यद्विषयान् ध्यात्वा बिभेति। वर्तमानविषयान् जहाति। अर्थात् गतानागतयो र्मध्ये दोलयति। गतस्मरणे, भविष्यद्ध्याने नष्टं किमिति प्रश्ना निरर्थका। यतः गतस्मरणेन नैराश्यं प्रवर्धते। आगामिविपत् ध्यानभयात् उद्विग्नता जायते। नैराश्यादिभ्यः जने उत्साहः, शक्तिः स्फुरणादयः नश्यन्ति। अतः गतस्मरणं भविष्यद्विपत्तिचिन्तनं निष्प्रयोजनमिति बोद्धव्यम्। परन्तु मनोनिग्रहः न सुलभसाध्यः। अत एव अभ्यासवैराग्यौ अत्यावश्यावित्युक्तं गीताचार्येण।

विद्यार्थिभिः करणीयः अभ्यासः, आचरितव्यः वैराग्यः च कीदृशौ इति पृष्टः चेत् विद्यार्थिनां कश्चित् लक्ष्यः, नैकशः तस्य स्मरणं च स्यादिति स्पष्टः भवति। यदा न विद्यते लक्ष्यः तदा जनः निष्क्रियः भवति। यानि यानि कार्याणि लक्ष्यसाधने नोपकुर्वन्ति तानि तानि झटिति वर्जयेत्। तादृशः त्यागः एव वैराग्यः इति कथ्यते। एतादृशाभ्यासवैराग्याभ्यां विद्यार्थिनः अतिशीघ्रमेव मानसिकसंक्षोभात् विमुक्ताः सन्तः विजयिनः भवन्ति। जीवितमपि ऐश्वर्येण, उत्साहेन, आरोग्येन च विराजते।



## ३०-०९-२०१९ तः ०८-१०-२०१९ पर्यन्तम्
## समाचरितस्य तिरुमल श्री वेङ्कटेश्वर स्वामिनः
## वार्षिक ब्रह्मोत्सवः। वाहनसेवाः, कलाप्रदर्शन दृश्याणि।



तिरुमल चतुर्षु माडवीथीषु उभय देवीभ्यां सहितस्य श्री स्वामिनः समक्षे गरुड ध्वजपटस्य प्रदर्शनम्।



तिरुमल श्रीनिवासस्य आलये ध्वजस्तंभे गरुडचित्र पटस्य आविष्कारः।



आन्ध्रप्रदेश् राज्यस्य सर्वकारपक्षतः श्री स्वामिनः पीताम्बराणि समर्पयन् मुख्यमन्त्री गौ. श्री वै.यस् जगन् मोहन रेड्डि वर्यः।



बृहत् शेषवाहन सेवायां भागं गृहीतः आन्ध्रप्रदेश् राष्ट्र मुख्यमन्त्री गौ.श्री वै.यस् जगन् मोहन रेड्डि महोदयाः।

# तिरुमलतिरुपतिदेवस्थानानि
## ३०-०९-२०१९ तः ०८-१०-२०१९ पर्यन्तम् समाचरित
## तिरुमल श्री वेङ्कटेश्वरस्वामिनः वार्षिक ब्रह्मोत्सवः वाहनसेवानी दृश्यमालिका


महाशेषवाहने श्रीदेवी भूदेवी समेत मलयप्पस्वामी!


लघुशेषवाहने श्रीवारु!, जीयरु स्वामिनः अध्यापकानां द्वियप्रबन्धपारायणम्।


हंसवाहने श्री वेङ्कटेश्वरस्वामी!


सिंहवाहने श्री स्वामी!


मौक्तिकमण्डपवाहने श्रीदेवी भूदेवी समेतः मलयप्पस्वामी!


कल्पवृक्षवाहने श्रीदेवी भूदेवी समेतः श्रीनिवासः!


सर्वभूपालवाहने श्रीदेवी भूदेवी समेतः श्रीनिवासः!


जगन्मोहन अलंकारे श्री स्वामी!

# तिरुमलतिरुपतिदेवस्थानानि

## ३०-०९-२०१९ तः ०८-१०-२०१९ पर्यन्तम् समाचरित

## तिरुमल श्री वेङ्कटेश्वरस्वामिनः वार्षिक ब्रह्मोत्सवः वाहनसेवानी दृश्यमालिका



गरुडवाहनोपरि श्री गरुडाचलपतिः!



हनुमद्वाहने श्री वेंकटाद्रिरामः!



गजवाहने श्रीनिवासः!



सूर्यप्रभवाहने श्रीसप्तगिरीशः!



चन्द्रप्रभवाहने श्री वेङ्कटेश्वरस्वामी!



स्वर्णरथोत्सवे श्रीदेवी, भूदेवी समेतः श्री मलयप्पस्वामी!



अश्ववाहनोपरि आनंदनिलयः!



श्रीदेवी, भूदेवी समेत श्रीनिवासस्य चक्रतीर्थोत्सवः!

# तिरुमलतिरुपतिदेवस्थानानि
## ३०-०९-२०१९ तः ८-१०-२०१९ पर्यन्तम् समाचरित
## तिरुमल श्री वेङ्कटेश्वरस्वामिनः वार्षिक ब्रह्मोत्सवस्य दृश्यानि।



दर्शनानंतरं आन्ध्रप्रदेश् राष्ट्र गवर्नर् श्री विश्व भूषण् हरिचन्दन् महोदयानां श्री स्वामिनः चित्रपटं ति.ति.दे. पालकमण्डलि अध्यक्षः श्री वै.वि.सुब्बारेड्डि महोदयाः, ति.ति.दे. कार्यनिर्वहणाधिकारी श्री अनिल् कुमार् सिंघाल् ऐ.ए.यस् महोदयाः समर्पयन्।



अन्ध्रप्रदेश् राष्ट्रमुक्यमंत्रिणे श्री वै.यस्.जगन्मोहनरेड्डि महोदयाय श्रीस्वामिनः तीर्थप्रसादान्, चित्रपटं च ति.ति.दे. कार्यनिर्वहणाधिकारी श्री अनिल् कुमार् सिंघाल् ऐ.ए.यस् प्रयच्छत्।



ऊञ्जल सेवा



सन्पनतिरुमञ्जनम्





कलाप्रदर्शन बृन्दाः





# ब्रह्मोत्सवे विशेष उत्सवाः

- श्री रोम्पिचर्ल यश्वन्त दीक्षितः
चरवाणि - ९४९४५३८५०९

### उत्सव वाहनानि

अत्र नवाह्निकोत्सवे वाहन नियमान् एवं वदन्ति।

**''हंस फणीन्द्रो हनुमान् मृगेन्द्रो पक्षिराट् तथा।
दन्तावळरथाश्वाश्च शिबिका पुष्प मण्डपः।
उत्सवे दिवसे श्रीमान् तानारुह्य यथाक्रमम्।
अर्चावतार माहात्म्यं लोकानां दर्शयेत् हरिः॥''**

इति अत्रिणा पुरातन्त्रे उक्तम्। अर्थात् हंसवाहन, शेष, हनुमंत, सिंह, गरुड, गज रथ, अश्व, शिबिका, पुष्पमण्डपादिषु वाहनेषु देवं संस्थाप्य, अर्चकः वाहनमारुह्य, अर्चावतार वैशिष्ट्यं भक्तेभ्यो दर्शयन्ति। एवं याने देवस्य आरोपणात् पूर्वं देवं तथैव यानं अपि अलंकुर्वन्ति। विशेषतया देवं, नानाविधवस्त्रैः रत्नयुत मकुटाङ्गद मकर कुण्डल केयूरहार कटिसूत्र उदर बन्धन, अङ्गुलीयक, मुक्तादाम प्रलम्ब यज्ञोपवीतादि आभरणैः सुगन्ध माल्यैश्च अलंकुर्वन्ति। देवस्य पुरतः नर्तक गायक, वादकाः, वेद पाटक विप्राः भाषा स्तोत्र पाठकाः सर्वे देवेन साकं प्रदक्षिणं कुर्वन्ति। अस्मिन्नुत्सवे ये जनाः समागत्य उत्सवं पश्यन्ति ते सर्वे वेदपाठक विप्रसमाः भवन्ति। तथैव द्विगुणी कृत यज्ञफलं आप्नुवन्ति इति मरीचिः विमानार्चन कल्पे प्रतिपादयति। रथस्थं केशवं दृष्ट्वा पुनर्जन्म न विद्यते। इत्युक्तरीत्या रथेस्थित देवं ये पश्यन्ति, तेषां पुनर्जन्म न भविष्यति इति शास्त्रकाराः वदन्ति।

### जलकुङ्कुमोत्सवः

अस्मिन् उत्सवे षष्ठे अहनि नित्यक्रियापरि - समापनानन्तरम् अलंकृत मण्डपे देवं संस्थाप्य, पुण्याह क्रियां कृत्वा एला, लवङ्ग, चन्दन, कर्पूर, कुंकुम, उशीर, जातीफालानि चूर्णीकृत्य नूतनकलशे संस्थाप्य, कमलसुवासित जलं चूर्णे संस्थाप्य, पङ्कवत् मिश्रीकृत्य, देवस्य पुरतः संस्थाप्य, अर्चयित्वा, तत् कुम्भस्थ कुंकुमादिद्रव्य सुवासित जलेन देवं प्रोक्षयन्ति।

### सप्तर्षि पूजा -

उत्सवे सप्तम दिने आचार्यः सप्त ऋत्विजः आहूय्य भृगु, मरीचि, पुलह, पुलसृत्य, अत्रि, क्रतु, वशिष्ठ रुपेण वरणं कृत्वा तान् पूजयित्वा तेभ्यः पृथक् पृथक् दक्षिणादानं कुर्वन्ति तेसर्वे शीक्षावल्ली पारायणं आचरन्ति। (तैत्तरीयोपनिषदि)

### गन्धोत्सवः

सप्तमदिने सायंकाले सुवर्णपात्रे घन सार, कुंकुम, उशीरादिवासित कृष्णा गुरुगन्धं संपादय्य तत् पात्रं याने संस्थाप्य। ग्राम प्रदक्षिणं कृत्वा, देवालयं प्रविश्य गन्धे श्रियं अभ्यर्च्य। श्री सूक्तेन गन्धं अभिमन्त्रय, देवस्याङ्गेषुगन्धं ऊर्ध्वाग्र मालिप्य, तत् शेष गन्धं भक्तेभ्यो ददति।

### मृगयोत्सवः

अस्मिन् उत्सवे अष्टम दिने मृगयोत्सवं आचरन्ति। तन्निमित्तं चक्र, शंख, गदा, शार्ङ्ग खेटकादि आयुधान् पूजयन्ति।

देवं अपि नव वस्त्रोत्तरीया भरणैः अलंकृत्य देव्यौ विना देवं एव अश्वे समारोप्य चक्रादि आयुधैः सह देवं ग्राम प्रान्त उपवने, विहारवीथ्यां वा संस्थाप्य देवाय इक्षुखण्डादि फलानि निवेद्य भक्तेभ्यो दत्वा अश्व गज आरुढ जनैः साकं सीमान्तरं गत्वा मृगया संभ्रमं नाटयित्वा, ग्राम प्रदक्षिणं कृत्वा, आलयं प्रविशन्ति। तत्र आलय द्वाराणि न उद्घाटयन्ति। किमर्धमित्युक्ते देव्या सह किञ्चित् सर्वानन्द कारि सर्व मङ्गळदायि संवादरुपं विनोदं कुर्वन्ति। किमर्धमिति चेत् ''देवी त्यक्त्वा देवः गतवान् किल। देव्याः कृते सम्पूर्ण उदन्तं देवः कथयति। हे देवि! अहं कुत्रापि न गतवान् मृगयात्रा निमित्तं एव गतवान् प्रमाणं अपि करोमि इति भणति अनन्तरं देवी अहं अज्ञात्वा अपराधं कृतवती, भवन्तः सर्वोपकरण संयुक्तः मदीयं भवनं आगच्छन्तु इति प्रार्थयति।

### जलक्रीडोत्सवः

मृगयोत्सवान्ते देवं जलक्रीडा मण्डपं प्रति आनयन्ति। तत्र विष्टरे उपावेश्य, नव वस्त्रैः अलंकृत्य, पूर्वमेव निर्मित जलद्रोण्यां जलं संस्थाप्य, चन्दन, कर्पूर, कुंकुम, अगरु कल्हार केतकी पुष्पाणि जले अधिवासयन्ति। अनन्तरं जल पूजां कृत्वा, देवं जले निवेश्य, विष्णु पुरुष सूक्तैः देवंस्मृत्वा कञ्चनकालं देवं जले अधिवास्य, अनन्तरं उद्धृत्य पुनः शुद्धोदकैः संस्नाप्य, नव वस्त्राभरणैः अलंकुर्वन्ति।

### शयनाधिवासः

अष्टम दिने रात्रौ देवस्य शयनाधिवासं कुर्वन्ति। तत्र शयन मण्डपं समीचीनतया वितान, ध्वज दर्भमाला तरङ्ग स्तम्भ वेष्टनाद्यैः अलंकृत्य। तत्र शय्यां प्रकल्प्य, तस्यां

**अण्डजं मुण्डजं चैव रोमजं वामजं तथा।**
**चर्मजं चात्र पञ्चैते पञ्चतल्पाः प्रकीर्तिताः॥**

इत्युकत रीत्या पञ्चतल्पानि संस्थाप्य। पुनः श्वेत नववस्त्रं आस्तीर्य उपधानद्वयं विन्यस्य परितः अष्टमङ्गळानि संस्थाप्य यद्दिक् द्वारं तत् दिक् शीर्षं स्थापयन्ति। अनन्तरं देवं अर्चयित्वा, चतुर्वेद, पुराण स्तोत्रादिभिः देवं संस्तूय गळात् अधस्तात् उत्तराच्छादनं कृत्वा पुष्पाणि विकीर्य प्रणामं कुर्वन्ति।

### डोलोत्सवः

नवम दिने प्रातः काले शयानं देवमुत्थाप्य डोला मण्डपं अलंकृत्य डोलायां देवं स्थापयित्वा अर्चनादिकं कृत्वा चतुर्वेदैः स्तूयमानः शनैः शनैः डोलां चालयन्ति। अन्तिमे देवाय नैवेद्यं दत्वा चूर्णोत्सवं प्रतिनयन्ति।

### चूर्णोत्सवः

देवं आस्थान मण्डपं प्रति आनीय आसने देवं संस्थाप्य तस्य पुरतः उलूखल, मुसलौ संस्थाप्य अर्चयन्ति। ततः परं उलूखले हरिद्रां प्रक्षिप्य आचार्यः किञ्चित् अवघातं करोति। अनन्तरं देवदासीभिः भक्तैः वा अवघातं कारयित्वा चूर्णी कुर्वन्ति। तेन चूर्णेन चतुरः कलशान् अथवा द्वौवा एकं वा पूरयन्ति। अनन्तरं पूरित चूर्ण कलशैः अर्चयित्वा वस्त्रेण आवेष्टनं कुर्वन्ति। पुनः देवं अर्चयित्वा सुगन्धितैलेन अभ्यञ्जनं कुर्वन्ति। तत् चूर्णेन देवं, सुदर्शन, चक्रं च अभिषिच्य। अवशिष्ट चूर्णं भक्तानां शिरस्सु निक्षिपन्ति किमर्धमिति चेत्।
''देवाङ्गस्पृष्टं चूर्णं यत् किञ्चिदपि शिरसि धारयेत्। तस्य अशुभानि नश्यन्ति इति मरीचिः कथयति।

### अवभृधोत्सवः

अस्मिन् उत्सवे देवं, सुदर्शनं विष्वक्सेनं, गरुडं अपि आलये ऐशान्ये स्थित पुष्करिणीं प्रतिवा तटाकं प्रति वा नदी संगमं समुद्रं प्रतिवा नीत्वा सिद्धाधौदक, अक्षतोदक, कुशोदक, जप्योदक, रत्नोदक कलशैः स्नापयन्ति। पश्चात् चक्रं, विष्वक्सेनं, गरुडं च तीर्थ जले मज्जयित्वा पुनः शुद्धोदकैः संस्नाप्य, नव वस्त्रोत्तरीय आभरणैः अलंकुर्वन्ति। पश्चात् सर्वे जनाः तीर्थ जले स्नानं कुर्वन्ति। तेन कारणेन जनाः पाप विमुक्ताः भूत्वा विष्णोर्लोकं गच्छन्ति इति महर्षयः वदन्ति। अनन्तरं पूर्णाहुतिं आचरन्ति।

### ध्वजावरोहणम्

तस्मिन् दिने रात्रौ आलय बलिं तथैव ग्रामं अर्पयन्ति। ग्राम बलिहरण समये ये ये देवताः उत्सवार्धं आगताः तान् सर्वान्

**"सुतृप्ता बलि पुष्पाद्यैः उत्सवार्धमिहागताः।**
**यूयं स्व नगरीं प्राप्य पुनरायान्तु सादराः।।"**

इति सर्वान् यथास्थानं उद्वासयन्ति। ततः परं वाद्य घोषं विना शुद्धान्नेन तद् ग्रामस्थ देवालयेषु शून्यागारेषु वापी, कूप, तटाक, आराम स्थानेषु ग्राम चतुस्सीमसु बलि निर्वापणं कुर्वन्ति। अनन्तरं आलयं प्रविश्यध्वजस्थानं गत्वा गरुडं अर्चयित्वा ध्वजावरोहणं कुर्वन्ति। ततः परं आचार्यः ध्वजं शिरसि निधाय आलय प्रदक्षिणं कृत्वा देवस्य पादमूले संस्थाप्य ब्रह्मघोषेन देवं स्तुन्वन्ति।

### द्वादशाराधनम्

दशमे अहनि सांयकाले देवी युक्तं देवं द्वादश वारं आलय प्रदक्षिणं कुर्वन्ति। प्रति प्रदक्षिणे विशेष वाद्येन विशेष नैवेद्येन अमुं कार्यक्रमं आचरन्ति।

(पञ्चमहावाद्येन, वेदपारायण, स्तोत्र प्रबन्ध, शंख, भेरिका, काहळ, कांस्यनाद, नृत्य गीत, मुरळीरव, वीणानाद, तूर्य अन्तिमे मौन प्रदक्षिणं आचरन्ति।

द्राक्षा, कदळी, खर्जूर, पनस, चूत, शर्कर, माषापूप, गुडापूप क्षीरान्न चित्रान्न, शर्करान्न, दध्यन्नादि नैवेद्यानि अर्पयित्वा, आनन्देन कालं यापयन्ति।

### श्रीपुष्पयागः

चक्रस्नानन्तरं द्वितीयदिने अयं उत्सवः क्रियते। किमर्धमितिचेत् उत्सवे ज्ञानतो वा अज्ञान तो वा बहवः दोषाः बहुषु स्थलेषु कृतवन्तः स्युः तत् प्रायश्चित्तार्धं अयं यागः क्रियते। अस्मिन् उत्सवे पद्म, करवीर, नीलोत्पल, नन्द्यावर्त, तुलसी, बिल्व, कुमुद, अपामार्ग, विष्णुक्रान्त दूर्वादीनि पुष्पाणि आनीय पूजां कृत्वा शंख डिण्डिम, काहळ, झल्लरी, मर्दळ, वीणा, वेणु मृदंगाद्यैः वाद्य विशेषैः अयं उत्सवः क्रियते। पश्चात् देवस्य प्रमुखे नृत्तगेयवाद्यकाः दक्षिणे पुराण पठन शीलाः, पश्चिमे ध्वनिस्तोत्र काराः उत्तरे सूत्र शिक्षा चणाः पारायणं कुर्वन्ति। केचन चतुर्दिक्षु चतुर्वेदान् जपन्ति। ऋत्विजः सर्वे अष्टाक्षरं, द्वादशाक्षरं, विष्णुगायत्रीं वा जपन्तः पुष्पाञ्जलं अर्पयन्ति।



एवं विंशति वारं करोति चेत् उत्तमम् इति तथैव षोडश वारं करोति चेत् मध्यमं, द्वादश वा अष्टवारं वा करोति चेत् अधमम् इति शास्त्रकाराः वदन्ति।

अनन्तरं आचार्य, ऋत्विक, परिचारक, नर्तक, गायकान् सर्वान् यथार्हं पूजयित्वाः तेभ्योः दक्षिणादानं कुर्वन्ति।

एवं प्रकारेण नवाह्निक उत्सवे स्थित विशेषः। भवन्ति।

### उत्सव फलम्

एवं प्रकारेण ये भक्त्या आचरन्ति तेषां शरीरे स्थित पापं तत् क्षणादेव नश्यति। तेन कारणेन दश पूर्वान्, दश अपरान् आत्मानं च एकविंशतिकं दैवैः अपि अनभिलक्ष्यं विष्णोः परमं पदं नयेत्। तद्ग्राम वासिनां सर्वेषां व्याधयः शान्तिं यान्ति, प्रजावृद्धिश्च भवति। यजमानः पुत्रकामाश्चेत् पुत्रः धन कामो धनानि प्रतिष्ठा कामः प्रतिष्ठां जयार्धी जयं श्रीकामः श्रियं च प्राप्नोति इति मरीचिः विमानार्चन कल्पे कथयति।



# श्री शिवस्तोत्रम्

- डा. एन्.उमादेवी
चरवाणि - ९९५१७३४४९४



गौरीश चन्द्रशेखर गङ्गाधर नीलकण्ठ शिवशम्भो।
शर्व महेश्वर शङ्कर गिरिश महादेव पशुपते पाहि।।

पुरमथने स्मरदहने जितनिधने वह्निसूर्यशशिनयने।
अनुकम्पाभूरिधने त्रिलोचने सर्वदास्तु मे हृदयम्।।

दक्षमखध्वंसाय त्र्यक्षाय विपक्षहानदक्षाय।
उक्षगमनाय सेवितृ रक्षणदीक्षाय ते नमस्कुर्मः।।

अपवर्गकारिणी खलरिपुवर्गमदापहारिणी शम्भो।
मच्चित्तचारिणी तव भक्तेनैरन्तरी सदा मेऽस्तु।।

नित्यं विषाद्यापि त्वं न कदाचन मां विषादिनं कुर्याः।
दोषाकरिप्रियोऽपि त्वं मा दोषाकरप्रियं न कुरु।।

द्रष्टुं विधिस्तव शिरश्चरणे द्रष्टुं हरिश्च संकल्प्य।
हंसः किरिश्च भूत्वा दूरं गत्वा न शेकतुरशम्भो।।

प्रोद्यच्चण्डांशुसूनुत्रिभुवन भयदोर्दण्डदण्डप्रहार -
त्रस्तं मार्कण्डमौनिप्रवरमवितुमत्यादरादात्मभक्तम्।
निर्वीर्यं मङ्क्षुकृत्वा प्रचकितहृदयं तं यमं संयमीन्द्रं
निस्सीमायुष्यवन्तं गतभयमकृथास्त्वत्कृपां स्तौमि शम्भो।।

कामं त्वां जेतुकामं धृतकुसुमशरस्तोममायान्तमन्ते
तं दग्ध्वा फालनेत्रोज्ज्वलदनलशिखावीक्षणेन क्षणेन।
जेतासीर्भूतनाथ त्रिनयन पुरजित्कालकाल स्मरारे
शत्रून्मे काममुख्यानपनुद तुदन्तं मां सदा दीनबन्धो।।

नित्यामृतश्रयणरत्या क्रधादिरिपुभीत्या भवाब्धितरणेऽ
गत्यन्तरो मनसि नित्यं भजामि मम मृत्युञ्जयं पशुपतिम्।
श्रुत्यन्त गम्यमजदैत्यारिमुख्यसुरनुत्या श्रयात्मचरितं
कात्यायनीरमणमत्यन्त भक्तियुतमत्या निशाकरधरम्।।

उक्षाधिरुढ पुररक्षोगण क्षपण दक्षाध्वरप्रमथन
त्र्यक्षावतंसितविधुक्षारकोल्लसित दाक्षायणी प्रियपते।
यक्षाधिनाथसख भिक्षो भवद्भजनदीक्षस्य मेऽद्य पुरत -
स्साक्षाद्भव द्रुहिणपक्षीन्द्र वाहनुत वीक्षस्व मां करुणया।।

सुरदनुजनिकार्यैर्मथ्यमाने पयोधौ
निखिलभुवनदाहप्रोद्यते कालकूटे।
सरसिजनयनादौ कम्पमाने सुरौघे
जगदवनकृते त्वं पीतवान्नीलकण्ठ।।

निरन्तरं हृदन्तरे यदन्धकान्तकान्तकं
स्मरान्तकं पुरान्तकं मखान्तकं भवान्तकम्।
समस्तलोकशङ्करं सदाशिवं सदा भजे
किमन्तकः करोतु मां भवान्तरं कुतो मम।।

इलाजलानलानिला भ्रपुष्पवत्पुमात्मकं
सुरापगालसज्जटाकदम्बकं महेश्वरम्।
रवीन्दुवह्निलोचनं नतालिबन्धमोचनं
नगात्मजामनोहरं नमामि चन्द्रशेखरम्।।

त्वां विप्राणां दैवतमाहुर्निगमज्ञाः
मोक्षेच्छूनां ज्ञानद एव त्वमसीरा।
तर्तुं संसाराम्बुनिधानं तरणिस्त्वं
तस्मात्सेवे त्वच्चरणाब्जं शशिं मौले।।

वेदेष्वध्ययनं स्वकर्मनिकरानुष्ठानमिज्यारतिः
कामक्रोधमुखारिवर्गदमनं योगक्रियासाधनम्।
सत्याहिंसनशान्तिदान्तिकलनं नास्त्येव मे त्वां विना
संसाराम्बुधितारकं गिरिसुताजाने न जाने परम्।।

स्नात्वा भस्मविलिप्तगात्र उषसि प्रसादपञ्चाक्षरीं
जप्त्वा त्वां हृदये निधाय शिव यो रुद्रानुवाकं पठन्।
लिङ्गे बिल्वदलैरनन्यमनसा रुद्रक्षधार्यर्चये -
त्तस्या भीष्टशुभोत्करः करगतो मुक्तिर्भवेत्संसृतेः।।

सन्ध्याताण्डवखेलनैकरसिकं नागेन्द्रहारोज्ज्वलं
विष्णुब्रह्मसुरेश्वरादि सुरबृन्दानन्दसन्धायकम्।
भक्तश्रेणिमनोरथाप्तिकलनं गङ्गाधरं शङ्करं
गौरीशं परमेश्वरं पशुपतिं चन्द्रार्धमौलिं भजे।।

दुरात्मा दुश्शीलो दुरितनिलयो दुष्ट इति ते
कृपाया नार्होऽसाविति पशुपते मां त्यजसि चेत्।
उपास्य त्वन्नामातिसुल भशिवेत्यक्षरयुगं
कृपायास्ते यद्यद्भवति हि लभै तत्तदखिलम्।।

स्त्रोतस्विनी बहुझरीगतकाष्ठतुल्यः
कर्मप्रवाह पतितोऽगतिकोऽस्मि दीनः।
वेगेन तस्य परितः किल नीयमानः
पारं नयाद्य बत सिन्धुमुपैमि शम्भो।।

य उपोष्य जागरित्वा माघे पक्षेऽसिते चतुर्दश्याम्
यामिन्यां शिवलिङ्गं पश्यति सयदृच्छयापि मुच्येत।।

कुरुयद्वा वद यद्वा यद्यन्मन्यस्व वा यद्दत्ता वा।
उपवस वैधि च जोषं न विस्मर स्मरविधस्मरं मन्तुम्।।
श्रीकण्ठेश्वर धूर्जटे पशुपते दक्षाध्वरध्वंसकृत्
भूतेश प्रमथाधिनाथ गिरिश श्री पार्वतीवल्लभ।
कामारे शमनान्तकान्धकरिपो गङ्गाधर त्र्यम्बक
शम्भो शङ्कर वामदेव करुणापायोनिधे पाहि माम्।।

त्वां नीललोहित सहस्त्रसरोजसूनैः
सम्पूजयन् सितसरोजदलायताक्षः।
एकं प्रसूनमवलुप्तमवेक्ष्य भक्ते -
रुत्पाट्य नेत्रकमलं स्वमुपाजहार।।

भव फालनयन भिक्षो भीम भुवननाथ पाहि भूतेश।
भृतबालचन्द्र भेषज भैरव भोगीशहार भौतात्मन्।।
श्री कण्ठ शङ्कर नागेन्द्रसुतासनाथ
गङ्गाधरेन्दुशिशुशेखर नीलकण्ठ।
ईशान सूनशरसूदन कालकाल
दीनार्तिहार हर तारय सङ्कटान्नः।।

परमशिवस्तोत्रमिदं कुप्पुस्वाम्याख्यरामकृष्णेन।
रचितं भक्त्या पठतामिहपरसौख्यप्रदशिशवो भूयात्।।



# धन्वन्तरिस्तोत्रम्

ॐ शङ्खं चक्रं जलौकां दधदमृतघटं चारुदोर्भिश्चतुर्मिः
सूक्ष्मस्वच्छातिहृदयांशुक परिविलसन्मौलिमम्भोजनेत्रम।
कालाम्भोदोज्ज्वलाङ्गं कटितटविलसच्चारुपीताम्बराढ्यम्
वन्दे धन्वन्तरिं तं निखिलगदवनप्रौढदावाग्निलीलम।।

ॐ नमो भगवते महासुदर्शनाय वासुदेवाय धन्वन्तरायेः
अमृतकलश हस्ताय सर्व भयविनाशाय सर्व रोगनिवारणाय
त्रिलोकपथाय त्रिलोकनाथाय श्री महाविष्णुस्वरुप
श्रीधनवन्तरी स्वरुप श्री श्री श्री औषधचक्र नारायणाय नमः।।




# अत्याग्रहः

कस्मिंश्चित् ग्रामे कश्चन ब्राह्मणकृषकः आसीत्। सः कृषिकार्याणि कृत्वा दिनानि नीतवान्। परन्तु तस्य क्षेत्रे फलसमृद्धिः न भवति स्म।

कदाचित् सः क्षेत्रे कार्यं कुर्वन् आसीत्। तदा सः समीपे विद्यमानस्य वल्मीकस्य उपरि स्थितम् एकं सर्पम् दृष्टवान्। सः चिन्तितवान् - 'एषः सर्पः मम क्षेत्रपालः स्यात्। एतत् अजानन् अहम् एतावत्पर्यन्तम् एतस्य पूजां न कृतवान्। अतः एव मम कृषिकार्यं निष्फलं भवति। इतः परम् अहम् एतं निश्चयेन पूजयिष्यामि' इति।

एवं चिन्तयित्वा सः कुतश्चित् क्षीरम् आनीय पात्रे स्थापयित्वा वल्मीकस्य समीपम् आगत्य उक्तवान् - 'भोः क्षेत्रपाल, भावन् अत्रैव अस्ति इति एतावत्पर्यन्तं न ज्ञातवान्। अतः पूजां न कृतवान्। क्षम्यताम्' इति। अनन्तरं पात्रं तत्र स्थापयित्वा गृहम् आगतवान्।

परेद्युः तत्र यदा गतं तदा पात्रे एकः नाणकं आसीत्। सः तं नाणकं स्वीकृतवान्। ततः आरभ्य सः एवमेव प्रतिदिनं क्षीरं समर्पितवान्, एकं नाणकं प्राप्तवान् च। एवमेव कानिचन दिनानि आतीतानि।

कदाचित् ब्राह्मणः ग्रामान्तरं गतवान्। गमनसमये सः क्षेत्रपालस्य पूजां कर्तुं स्वपुत्रं आज्ञापितवान्। सः पुत्रः वल्मीकसमीपं गत्वा क्षीरं स्थापयित्वा आगतवान्। अनन्तरदिने नाणकं प्राप्तवान्। नाणकं दृष्ट्वा सः चिन्तितवान्। निश्चयेन एतस्मिन् वल्मीके प्रभूतं नाणकानि सन्ति। अतः एतं सर्पं मारयित्वा सर्वान् स्वीकरोमि इति। अनन्तरदिने क्षीरदानसमये सः दण्डने सर्पं ताडितवान्। सर्पः रोषेण तं दष्टवान्। तेन सः पुत्रः मृतः। एवं सः मूर्खपुत्रः दुराशया स्वयमेव नष्टः।





अपूर्वः कोपि कोशोयं विद्यते तव भारती।
व्ययतो वृद्धिमायाति क्षयमायाति संचयात्।।

# भक्तसेवायाम्




श्री श्रीनिवासस्य ब्रह्मोत्सवेषु ३०.०९.२०१९ दिनाङ्के श्रीनिवास वेदविद्वत् सभां ति.ति.दे. पालकमण्डलि अध्यक्षः गौ.श्री.वै.वि.सुब्बरेड्डि महोदयाः प्रारम्भं कृत्वा प्रसङ्गं चक्रुः। तथा च श्री वेङ्कटेश्वर वेद विश्वविद्यालयस्य पूर्वोपाध्यक्षः आचार्य के.इ.देवनाथन्, ति.ति.दे. संयुक्त कार्यनिर्वहणाधिकारी श्री ए.वि.धर्मारड्डि महोदयः, एस्वी उन्नत वेदाध्यन संस्थायाः प्रत्येकाधिकारी डा. आकेल्ल विभीषण शर्मा च भागं गृहीतवन्तः।



ति.ति.दे. महाप्रदर्शनशालां ३०.०९.२०१९ दिनाङ्के ति.ति.दे. पालकमण्डलि अध्यक्षः गौ.श्री.वै.वि.सुब्बारेड्डि महोदयाः समपश्यन्। इमं पालक मण्डलि सभ्यः श्री डि.पि.अनंतः उध्यानवनशाखाधिकारी डा.श्रीनिवासश्च अनुसृतवन्तौ।



श्री स्वामिनः ब्रह्मोत्सव संदर्भे आलयसमीपे स्थितानां भक्तानां अन्नप्रसादस्य वितरणं कुर्वन् ति.ति.दे. पालकमण्डलि अध्यक्षः गौ.श्री.वै.वि.सुब्बारेड्डि महोदयः।



श्री स्वामिनः ब्रह्मोत्सवान् द्रष्टुं आगतै भक्तैः देवस्थानेन कल्पित सौकर्याणां विषये पृच्छमानः ति.ति.दे. पालकमण्डलेः अध्यक्षः गौ.वै.वि.सुब्बारेड्डि महोदयः एवं अडिषनल् इ.ओ. श्री ए.वि.धर्मारेड्डि महोदयाः, पालकमण्डलिसभ्यः श्री मेडा मल्लिकार्जुन रेड्डि।



श्री श्रीनिवासस्य ब्रह्मोत्सेषु ०१.१०.२०१९ दिने ति.ति.दे देवस्थानेन प्रकाशितान् ग्रन्थान् आविष्कारं कुर्वन् ति.ति.दे. पालकमण्डलेः अध्यक्षः गौ.श्री.वै.वि.सुब्बारेड्डि महोदयः ति.ति.दे. कार्यनिर्वहणाधिकारी श्री अनिल् कुमार् सिंघाल् ऐ.ए.यस्. ति.ति.दे. ग्रन्थ प्रकाशन् विभाग प्रत्येकाधिकारी डा.आंजनेयुलु अन्ये कर्मकराः।

०२.१०.२०१९ दिने तिरुमले निर्मित 'मातृश्री वकूलादेवि विश्रान्ति गृहं' ति.ति.दे. पालकमण्डलेः अध्यक्षः गौ.श्री वै.वि. सुब्बारेड्डिः प्रारब्धवान्। अनेन साकं तिरुमल अडिषनल् जे.ई.ओ. श्री एवि.धर्मा रेड्डिः तिरुपति जे.ई.ओ बसंत कुमार् ऐ.ए.यस् चीफ् इंजनीर् श्रीरामचन्द्रारेड्डिः, पि.आर्.ओ. श्री टि.रवि. महोदयाः भागं स्वीचक्रुः।





श्री स्वामिनः ब्रह्मोत्सव सन्दर्भे ०७.१०.२०१९ दिने श्री स्वामिनः अश्ववाहन सेवायां भागं गृहीताः ति.ति.दे. पालकमण्डलेः अध्यक्षः गौ.श्री वै.वि.सुब्बारेड्डिः ति.ति.दे. कार्यनिर्वहणाधिकारी श्री अनिल् कुमार् सिंघाल् ऐ.ए.यस्, ति.ति.दे. पालक मण्डलि सभ्यः श्री डि.पि.अनन्तः ति.ति.दे. प्रधानार्चकः वेणुगोपालदीक्षितुलु इत्यादयः।

ति.ति.दे. श्री वेङ्कटेश्वर भक्ति चानल् समीक्षा समावेशे प्रसङ्गं कुर्वन् ति.ति.दे. पालकमण्डलेः अध्यक्षः गौ.श्री वै.वि.सुब्बारेड्डिः। अस्मिन् समावेशे तिरुपति जे.इ.ओ. श्री बसंतकुमार् ऐ.ए.यस्. एस्.वि.बि.सि अध्यक्षः तथा दर्शकः श्री बालिरड्डि पृथ्वीराज्, सि.इ.ओ. श्री वेङ्कट नगेष् अपि भागं गृहीताः।





Edited and Published on behalf of T.T.Devasthanams by Dr. K.Radharamana, M.A., M.Phil., Ph.D., Chief Editor, T.T.D., and Printed at T.T.D. Press by Sri. R.V. Vijay Kumar, B.A. B.Ed., Dy.E.O., (Publication & Press), T.T.D. Press, Tirupati - 517 507.



## तिरुमलतिरुपतिदेवस्थानस्य
# धर्मकर्तृ मंडलिः

तिरुमल तिरुपति देवस्थानस्य नूतन धर्मकर्तृ मंडिलं आन्ध्रप्रदेश् प्रभुत्वं अध्यक्षं, सभ्यान्, एक्स् अफिषियो सभ्यान्, विशिष्ट आह्वानितान् नियुङ्क्त एभिः तिरुमल श्री स्वामिनः आलये ति.ति.दे. कार्यनिर्वहणाधिकारी, उन्नताधिकारिणः प्रमाणस्वीकारं कारितवन्तः श्री श्रीनिवासस्य तीर्थप्रसादान् प्रदत्तवन्तः। वेदपण्डिताः तेभ्यः आशीर्वचनं कृतवन्तः।



श्री चिप्पगिरि वेंकट प्रसाद् कुमारः
सभ्यः



श्री यम्.यस्.शिवशंकरन्
सभ्यः



श्री संपत् रविनारायणन्
सभ्यः



श्रीमती सुधा नारायणमूर्ति
सभ्यः



श्री आर्.कुमरगुरु
सभ्यः



श्री पुट्टा प्रताप् रेड्डिः
सभ्यः



श्री के.शिवकुमारः
सभ्यः



डा. मन्मोहन् सिंग् ऐ.ए.यस्
प्रभुत्व प्रत्येक प्रधान कार्यदर्शि रेविन्यू एंडोमेन्टस्
एक्स् अफिषियो सभ्यः



डा. यम्.पद्म ऐ.ए.एस्,
कमीषनर् एंढोमेंटस् विभागं एक्स् अफिषियो सभ्यः



डा. चेविरेड्डि भास्कर्रेड्डिः
तुडा अध्यक्षः,
एक्स् अफिषियो सभ्यः



श्री अनिल् कुमार्सिंघाल्, ऐ.ए.यस्
ति.ति.दे.कार्यनिर्वहणाधिकारि,
एकस् अफिषियो सभ्यः



श्री भूमन करुणाकररेड्डिः
प्रत्येक आह्वानितः



श्री राकेष् सिन्हा
प्रत्येक आह्वानितः



श्री ए.जे.शेखर्
प्रत्येक आह्वानितः



श्री कुपेन्द्ररेड्डिः
प्रत्येक आह्वानितः



श्री गोविन्दहरि
प्रत्येक आह्वानितः



श्री दुष्मंतकुमार्दास्
प्रत्येक आह्वानितः



श्री अमोल् काले
प्रत्येक आह्वानितः

